# क्षुद्रकल्पसूत्रम्

## प्रथमोऽध्यायः

ग्रामकामस्य क्लृप्तो ज्योतिष्टोमः १ प्रजाकामस्य उपोषु जातमप्तुरमिति स्तोत्रीयो नौधसस्यर्क्षु जनित्रं ब्रह्मसाम न हि वश्चरमं चनेत्येतयोः पूवम् । निर्मध्या सप्तदशस्य विष्टुतिरूर्ध्वं होतुः पृष्ठात् । समानमितरं ज्योतिष्टोमेन २ यां समां महादेवः पशून् हन्यात् ३ स नः पवस्व शंगव इति स्तोत्रीय आवृत्तस्तृचः ४ नौधसस्यर्क्षु आथर्वणं ब्रह्मसाम ५ उद्यत्थो विष्टुतयः । समानमितरं ज्योतिष्टोमेन ६ श्रैष्ठ्यका-मस्याग्रियवती प्रतिपद् । बार्हतान्याज्यानि । बृहत्पृष्ठं श्यैतं ब्रह्मसाम । श्रुध्यमुष्णिहि । समानमितरं ज्योतिष्टोमेन ७ बहूनामसखीनां यजमानानामेते असृग्रमिन्दव इति स्तोत्रीयः । सप्तास्थिता सप्तदशस्य विष्टुतिः पृष्ठानाम् । समानमितरं ज्योतिष्टोमेन ८ सखीनां यजमा-नानां दविद्युतत्या रुचेति स्तोत्रिय उपास्मै गायता नर इत्यनुरूपः । सप्तास्थिता सप्तदशस्य विष्टुतिः पृष्ठानाम् । समानमितरं ज्योतिष्टोमेन ९ दीक्षिते मृते अग्न आयूंषि पवस इति प्रतिपदमन्यत्र व्यूढेभ्यो अहोभ्यः १० व्यूढेषु चेत्प्रेयात् । यदैव तदा गायत्रीप्रतिपत्कमहः स्यात्तस्यैषा प्रतिपत् ११ अन्यत्रोदयनीयादतिरात्रात् । समानमितरं ज्योतिष्टोमेन १२

इति प्रथमप्रपाठके प्रथमः खण्डः १

### द्वितीयः खण्डः

ज्योगामयाविन आ नो मित्रावरुणा दविद्युतत्या रुचा पवमानस्य ते कव इति तृचक्लृप्तं बहिष्पवमानम् । आ नो मित्रावरुणा पवस्व वाचो अग्रिय उपास्मै गायता नरः इति संभार्यस्तोत्रीय इति वा । अग्न आयाहि वीतय इति राथन्तरम् । त्रीणि बार्हतानि । अग्निं दूतं वृणीमह इति पूर्वे बार्हते । उत्तरे राथन्तरे इति वा । पुनानः सोम

धारयेति रौरवं यौधाजयं दैर्घश्रवसमुद्रद्वा प्राजापत्यम् । त एकर्चाः । रथन्तरं तिसृषु । बृहत्पृष्ठं त्रैशोकं ब्रह्मसाम । इन्द्रं विश्वा अवीवृधन्निति कालेयम् । उप शिक्षापतस्थुष इति सफं श्रुध्यमुष्णिहि १ ककुभावुत्तरे रथन्तरस्य करोति २ ब्रह्मायतनीया सप्तदशस्य विष्टुतिर्होतुः पृष्ठस्य ३ उद्यत्येकविंशस्य विष्टुतिरग्निष्टोमसाम्नः । समानमितरं ज्योतिष्टोमेन ४ तस्य संपत् । षोडशाक्षराणि रथन्तराल्लुप्यन्ते । तावद्ब्रह्मायतनीयागर्भिणीभ्यामतिरिच्यन्ते । तत्संपन्नम् ५ सप्ततिरक्षराणि त्रैशोकादतिरिच्यन्ते । तावत्सफकालेयाभ्यां लुप्यन्ते । तत्संपन्नम् ६ अनृतमभिशस्यमानस्य अपघ्नन्पवते मृधो इति स्तोत्रीयो नौधसस्यर्क्षु शुद्धाशुद्धीयं ब्रह्मसाम यत्पदनिधनम् । सूर्म्यैकविंशस्य विंशतिरग्निष्टोमसाम्नः । समानमितरं ज्योतिष्टोमेन ७ राज्ञो यजमानस्य वृषा पवस्व धारयेति स्तोत्रीयः । श्यैतस्यर्क्षु वृषा ब्रह्मसाम । एकवृषं यद्येकराजः । समानमितरं श्रैष्ठ्यकामेन ८ जन ईर्त्सतः पवस्वेन्दो वृषा सुत इति स्तोत्रीयः । समानमितरं श्रैष्ठ्यकामेन ९

इति प्रथमप्रपाठके द्वितीयः खण्ड २

## तृतीयः खण्डः

द्वयोर्यजमानयोर्युवं हि स्थः स्वःपती इति स्तोत्रीय आवृत्तस्तृचः । पुनानः सोमधारयेति रौरवं यौधाजयं दैर्घश्रवसमुद्रद्वा प्राजापत्यम् । त एकर्चाः । अश्विनोर्व्रतं तिसृषु यत्पूर्वम् । पुरोजितो वो अन्धस इति श्यावाश्वमान्धीगवमौदलम् । त एकर्चाः । अश्विनोर्व्रतं तिसृषु यदुत्तरम् । समानमितरं ज्योतिष्टोमेन १ वृष्टिकामस्य प्रास्य धारा अक्षरन्निति स्तोत्रीयः । पुनानः सोम धारयेति रौरवं यौधाजयं दैर्घश्रवसमुद्रद्वत्प्राजापत्यम् । त एकर्चाः । अपांव्रतं तिसृषु यत्पूर्वम् । नौधसस्यर्क्षु सौभरं ब्रह्मसाम । तस्य हीषीति निधनम् । पुरोजिती

वो अन्धस इति श्यावाश्वमान्धीगवमौदलम् । त एकर्चाः । अपांव्रतं तिसृषु यदुत्तरम् । समानमितरं ज्योतिष्टोमेन २ जन्या गा विवित्समानस्य तया पवस्व धारया यया गाव इहागमन्निति स्तोत्रीयः । पुनानः सोम धारयेति रौरवं यौधाजयं दैर्घश्रवसमुद्वद्वा प्राजापत्यम् । त एकर्चाः । गवांव्रतं तिसृषु यत्पूर्वम् । त्रैककुभं ब्रह्मसामत्वमङ्ग प्रशंसिष इत्येतासु । स्वादिष्ठया मदिष्ठयेति गायत्रं संहितं सत्रासाहीयम् । त एकर्चाः । गवांव्रतं तिसृषु यदुत्तरम् । समानमितरं ज्योतिष्टोमेनेति प्रतिपदाः ३

इति प्रथमप्रपाठके तृतीयः खण्डः ३

## चतुर्थः खण्डः

अथातो ब्रह्मसामिकाः । क्लृप्तौ श्यैतनौधसब्रह्मसामानौ १ अभिचरतः श्येनस्य प्रतिपच्चाज्यानि च । पुनानः सोम धारयेति रौरवमेकस्याम् । अभिनिधनं काण्वमेकस्याम् । दैर्घश्रवसमेकस्याम् । उद्वद्वा प्राजापत्यम् । यौधाजयं तिसृषु । वषट्कारणिधनं ब्रह्मसाम । एष ब्रह्मा य ऋत्विय इति कालेयम् । अभिचरणीया विष्टुतयः । समानमितरं ज्योतिष्टोमेन २ तस्य संपत् । सप्तदशविंशत्यक्षराणि वषट्कारणिधनादतिरिच्यन्ते । तत् कालेयाल्लुप्यते । तत्संपन्नम् ३ क्लृप्तः पशुकामस्य ४ क्लृप्तो ज्योगामयाविनः ५ प्रतिष्ठाकामस्य नौधसस्यर्क्षर्वाष्कारणिधनं काण्वं ब्रह्मसाम । समानमितरं ज्योतिष्टोमेन ६ क्लृप्तः प्रजाकामस्य ७ लोककामस्य नौधसस्यर्क्षर्वाथर्वणं ब्रह्मसाम । उद्यत्यो विष्टुतयः । समानमितरं ज्योतिष्टोमेनेति । इति रथन्तरपृष्ठः ८ अथ यदि बृहत्पृष्ठोऽग्रियवती प्रतिपत् । बार्हतान्याज्यानि । बृहत्पृष्ठम् । श्यैतस्यर्क्षर्वाथर्वणं ब्रह्मसाम । श्रुध्यमुष्णिहि । उद्यत्यो विष्टुतयः । समानमितरं ज्योतिष्टोमेन ९ भ्रातृव्यवतोऽभीवर्तो ब्रह्मसाम । अभिचरणीया विष्टुतयः ।

समानमितरं ज्योतिष्टोमेन १० यज्ञविभ्रष्टस्य श्रायन्तीयं ब्रह्मसाम । वयमु त्वामपूर्व्येति कालेयम् । समानमितरं ज्योतिष्टोमेन ११ तस्य संपत् । सप्तदशाष्टाक्षराणि श्रायन्तीयादतिरिच्यन्ते । तावत्कालेयाल्लुप्यते । तत्संपन्नम् १२ योनेर्यज्ञं तन्वानस्य यज्ञायज्ञीयं बहिष्पवमानम् ससुन्वेयो वसूनामुप शिक्षापतस्थुष इति सफपौष्कले । यज्ञायज्ञीयस्यर्क्षु गायत्रमग्निष्टोमसाम । समानमितरं ज्योतिष्टोमेन १४ तस्य संपत् । षडक्षराणि बहिष्पवमानादतिरिच्यन्ते । तावदुष्णिक्ककुभ्यां लुप्यते । तत्संपन्नम् १५

इति प्रथमप्रपाठके चतुर्थः खराड ४

पञ्चमः खराडः

अथात उक्थान्तस्य भवतः आष्टादंष्ट्राच्छावाकसाम्नः १ मत्स्यपायि ते मह इति कालेयम् । परि प्र धन्वेति सफम् । साकमश्वम् । हारिवर्णमाष्टादंष्ट्रमित्युक्थानि । समानमितरं ज्योतिष्टोमेन २ तस्य संपत् । चतुर्दश चतुरक्षराणि आष्टादंष्ट्रादतिरिच्यन्ते । तावत्सफकालेयाभ्यां लुप्यते । तत्संपन्नम् ३ अथात उक्थ्यान्तस्यैव भवत उद्वंशीयाच्छावाकसाम्नः ४ नौधसस्य षट् ककुभः ५ आ त्वा रथं यथोतय इति कालेयम् । स सुन्वे यो वसूनाम् परि प्र धन्वेति सफपौष्कले । साकमश्वं हारिवर्णमुद्वंशीयमित्युक्थानि । समानमितरं ज्योतिष्टोमेन ६ तस्य संपत् । चतुर्दश द्वादशाक्षराणि सप्त चाष्टाक्षराणि उद्वंशीयादतिरिच्यन्ते । तावत्पृष्ठानां ब्रह्मसामाच्छावाकसामाभ्यामुष्णिक्ककुब्भ्यां च लुप्यते । तत् संपन्नम् ७ ब्रह्मवर्चसकामस्य स्वादिष्ठया मदिष्ठयेति गायत्रं संहितं सत्रासाहीयम् । त एकर्च्चाः । ऐडं कौत्सं तिसृषु । पुरोजिती वो अन्धस इति श्यावाश्वमेकस्याम् । क्रौञ्चमेकस्याम् । अयं पूषेति यद् द्वितीयमौदलमेकस्याम् । आन्धीगवं तिसृषु । साकमश्वम् । एवा ह्यसि

वीरयुरिति सौभरम् । इन्द्रं विश्वा अवीवृधन्न इति नार्मेधम् ८ दशास्तूयमाना गायत्र्यः । सप्ततिः स्तूयमानाः ९ समानमितरं ज्योतिष्टोमेन १० तस्य संपत् । एकविंशतिश्चतुरक्षराण्युक्थानां ब्रह्मसाम्नो लुप्यन्ते । तावत्कौत्सक्रौञ्चाभ्यां च नार्मेधाच्चातिरिच्यते । तत्संपन्नम् ११

इति प्रथमप्रपाठके पञ्चमः खण्डः ५

षष्ठः खण्डः

पशुकामस्य मत्स्यपायि ते मह इति कालेयम् । परि प्र धन्वेतिसफम् । साकमश्वम् । तं ते मदं गृणीमसीति सौभरम् । इन्द्रं विश्वा अवीवृधन्निति नार्मेधम् १ नवास्तूयमाना उष्णिहः । त्रिषष्टि स्तूयमानाः २ समानमितरं ज्योतिष्टोमेन ३ तस्य संपद्यथाष्टा-दंष्ट्राच्छावाकसाम्नः ४ पुरुषकामस्य मत्स्यपायि ते मह इति कालेयम् । परि प्र धन्वेति सफम् । साकमश्वम् । सौभरम् । इन्द्रं विश्वा अवीवृधन्निति नार्मेधम् ५ नवास्तूयमानाः ककुभः । त्रिषष्टि स्तूयमानाः ६ समानमितरं ज्योतिष्टोमेन ७ तस्य संपद्यथा पूर्वस्य ८ अन्नाद्यकामस्य इन्द्रायाहि धियेषित इति मध्यमां तृचस्य प्रभृतिं कृत्वा तासु कालेयम् ९ आ यः पुरं नार्मिणीमदीदेदिति साकमश्वम् । तं ते मदं गृणीमसीति सौभरम् । इन्द्रं विश्वा अवीवृधन्निति नार्मेधम् १० नवास्तूयमाना विराजः । त्रिषष्टि स्तूयमानाः ११ समानमितरं ज्योतिष्टोमेन १२ तस्य संपत् । पञ्च दशाक्षराणि द्वादश चैकादशा-क्षराण्युक्थेभ्योऽतिरिच्यन्ते । तावत्कालेयाल्लुप्यते । तत्संपन्नम् १३ ज्यैष्ठ्यकामस्य गायन्ति त्वा गायत्रिण इति कालेयम् । स सुन्वेयो वसूनामिति सफम् । अग्ने तमद्याश्वं न स्तौभैरिति साकमश्वम् । तं ते मदं गृणीमसीति सौभरम् । इन्द्रं विश्वा अवीवृधन्निति नार्मेधम् १४ अष्टावस्तूयमाना अनुष्टुभः । षट्पञ्चाशत्स्तूयमानाः १५ समान-

मितरं ज्योतिष्टोमेन १६ तस्य संपत् । षट्चतुरक्षराणि द्वादश च पञ्चाक्षराण्युक्थेभ्योऽतिरिच्यन्ते । तावत्सफकालेयाभ्यां लुप्यते । तत्संपन्नम् ॥ तत्संपन्नम् १७

इति प्रथमे प्रपाठके षष्ठः खण्डः ६

प्रथमे प्रपाठके सप्तमः खण्डः

प्रतिष्ठाकामस्य क्लृप्तं रथन्तरं संधिषाम १ स्वर्गकामस्य बृहत् संधिषामैतेष्वेव प्रगाथेषु २ वारवन्तीयं वा वामदेव्यं वा श्रुध्यं वैतेषामेकम् । पशुकामाय संधिं कुर्यादेतेष्वेव प्रगाथेषु ३ ऐडं चेत् संधिषाम स्यात्कौत्सस्य लोक उद्वंशीयम् । आ त्वा विशन्त्विन्दव इत्येतासु ४ सत्रात्साम्युत्तिष्ठतः क्लृप्तो विश्वजिदतिरात्रः सर्ववेद-सदक्षिणः ५ अभिविवासाच्छङ्कमानाः ६ पञ्चदशभिर्होत्रे स्तुयुः पञ्चभिः पञ्चभिरितरेभ्योऽग्ने विवस्वदुषस इति संधिना स्तुयुस्त्रिकेण स्तोमेन ७ ते निकामात्सोममतिरिच्य ८ त्रिकद्रुकेषु महिषो यवाशिरमिति बृहताष्टाचत्वारिंशेन स्तुवीरन् ९ उपोत्तमयोर्द्वयोः प्रचेतनप्रचेतयेत्युपसर्गावुद्धरति १० समानमितरं ज्योतिष्टोमेन ११ तस्य संपत् । नवतिरनुष्टुभो रात्रेलुप्यन्ते । द्वे च बृहत्यौ । चतस्रश्च ककुभः । संधेरष्टाचत्वारिंशमेतत्स्तोत्रम् । तत्संपन्नम् १२ यद्यर्वाक् स्तुयुर्यावतीभिर्न स्तुयुस्तावतीभिर्वातिष्टुयुः १३ भूयोऽक्षराभिर्वा १४ त्रीडं वाग्निष्टोमसाम कुर्युः १५ तस्य कल्पः १६ पुरोजिती वो अन्धस इति श्यावाश्वमान्धीगवमौदलं त एकर्चाः । यज्ञायज्ञीयं तिसृषु । यज्ञायज्ञीयस्यर्क्षु महावैश्वामित्रमग्निष्टोमसाम । समानमितरं ज्योति-ष्टोमेन १७ यद्यतिष्टुयुर्यावतीभिरतिष्टुयुस्तावतीभिर्वा न स्तुयुः १८ कनीयोऽक्षराभिर्वा १९ स्वारं वाग्निष्टोमसाम कुर्युः २० तस्य कल्पः २१ कावस्यर्क्षु यज्ञायज्ञीयमन्त्यम् । यज्ञायज्ञीस्यर्क्षु दैर्घश्रवस-मग्निष्टोमसाम । समानमितरं ज्योतिष्टोमेन २२ ऊर्ध्वमग्निष्टोमसा-

म्नोऽर्वाग्वा स्तुवन्तः परो वा स्तोत्रीयासमं वा कुर्युरक्षरसमं वा २३
इति प्रथमे प्रपाठके सप्तमः खण्डः ७

अष्टमः खण्डः

सोमे संसुते १ पवस्वेन्दो वृषा सुतो दविद्युतत्या रुचा पावमानस्य ते कवे इति तृचक्लृप्तं बहिष्पवमानम् ॥ पवस्वेन्दो वृषा सुत उपास्मै गायता नरः पवस्व वाचो ऋग्रियः इति संभार्यस्तोत्रिय इति वा ॥ अग्न आयाहि वीतय इति रथन्तरम् । त्रीणि बार्हतानि । अग्निं दूतं वृणीमह इत्युभयान्याज्यानीति वा ॥ वृषा पवस्व धारयेति गायत्रं चामहीयवं च । पुनानः सोम धारयेति रौरवमेकस्याम् । यौधा-जयमेकस्याम् । स्वारं तौरश्रवसमेकस्याम् । रथन्तरं तिसृषु । वृषा शोण इति पार्थमन्त्यम् ॥ बृहच्च वामदेव्यं च श्यैतं च कालेयं च ॥ अचिक्रदद्वृषा हरिरिति गायत्रसंहिते । पवस्वेन्द्रमच्छेति सफश्रुध्ये । पुरोजिती वो अन्धस इति श्यावाश्वमेकस्याम् । निधनवत्तौरश्रवसमेकस्याम् । औदलमेकस्याम् । आन्धीगवं तिसृषु । कावमन्त्यम् ॥ यज्ञायज्ञीयमग्निष्टोमसाम २ ककुभावुत्तरे रथन्तरस्य करोति । ब्रह्मायतनीया सप्तदशस्य विष्टुतिर्होतुः पृष्ठस्य ३ छन्दोदेवत्या तृतीया प्रवृतहोमयोर्यथासवनम् ४ कयाशुभीये मरुत्वतीयस्य निविदो दध्यात् ५ सजनीये निष्केवल्यस्य ६ विहव्ये वैश्वदेवस्य ७ अपि वैतान्येव सूक्तानि पुरस्तान्निविद्धानानां शस्त्वा ८ अथ यथायतनमेव निविदो दध्यात् ९ तस्य संपत् । यथा ज्योगामयाविनो रथन्तरे १० सोमेऽपहृते श्रायन्तीयं ब्रह्मसाम । वयमु त्वामपूर्व्येति कालेयम् । पुरोजिती वो अन्धस इति श्यावश्वमान्धीगवमौदलम् । त एकर्चाः । यज्ञा-यज्ञीयं तिसृषु । यज्ञायज्ञीयस्यर्क्षु वारवन्तीयमग्निष्टोमसाम । पञ्च दक्षिणाः । समानमितरं ज्योतिष्टोमेन ११ तस्य संपद्यथा यज्ञविभ्रष्टे १२

इति प्रथमे प्रपाठके अष्टमः खण्डः ८

नवमः खण्डः

कलशे दीर्घे १ सम्मिते द्वे सवने पूर्वेण २ स सुन्वे यो वसूनामुप शिक्षाप तस्थुष इति सफपौष्कले । त्वं द्यां च महिव्रतेत्यावर्त्य तृचम् । श्यावाश्वमेकस्याम् । अन्धीगवमेकस्याम् । वषट्कारणिधन-मेकस्याम् । पुरोजिती वो अन्धस इति यज्ञायज्ञीयं तिसृषु । अनु-ष्टुप्प्रथमा । गायत्र्यावुत्तरे । यज्ञायज्ञीयस्यर्क्षु वारवन्तीयमग्नि-ष्टोमसाम । समानमितरं ज्योतिष्टोमेन ३ तस्य संपत् । विंश-तिरक्षराणि वषट्कारणिधनादतिरिच्यन्ते । तावदुष्णिक्ककुब्भ्यां च यज्ञायज्ञीयाच्च लुप्यते । तत्संपन्नम् ४ अथातो वषट्कारणिधन-ब्रह्मसामा श्रायन्तीयानुष्टुप्कः ५ विधुं दद्राणं समने बहूनाम् इति वषट्कारणिधनं ब्रह्मसाम । एष ब्रह्मा य ऋत्विय इति कालेयम् । परि प्र धन्वेति सफम् । त्वं द्यां च महिव्रतेत्यावर्त्य तृचम् । श्यावाश्वमेकस्याम् । आन्धीगवमेकस्याम् । श्रायन्तीयमेकस्याम् । पुरोजिती वो अन्धस इति यज्ञायज्ञीयं तिसृषु । सर्वास्वनुष्टुप्सु यज्ञायज्ञीस्यर्क्षु वारवन्तीयमग्निष्टोमसाम । समानमितरं ज्योतिष्टोमेन ६ तस्य संपत् । सप्तदश विंशत्यक्षराणि वषट्कारणिधनादति-रिच्यन्ते । तावत्कालेयाल्लुप्यते । तत्संपन्नम् । अष्टावक्षराणि श्रायन्तीयादतिरिच्यन्ते । तावत्सफाल्लुप्यते । तत्संपन्नम् ७

इति प्रथमे प्रपाठके नवमः खण्डः ९

दशमः खण्डः

प्रातःसवनात्सोमेऽतिरिक्तेऽस्ति सोमो अयं सुत इति मरुत्वतीषु गायत्रेण स्तुयुः पञ्चमेनाज्येन । त्रिवृत्पञ्चदशे पृष्ठानां ब्रह्मसामाच्छा-वाकसामनी स्याताम् । समानमितरं ज्योतिष्टोमेन १ तस्य संपत्

। पञ्चदश गायत्र्यः प्रातःसवनादतिरिच्यन्ते । तावत्पृष्ठानां ब्रह्मसामाच्छावाकसामभ्यां लुप्यते । तत् संपन्नम् २ माध्यंदिनात्सवनादतिरिक्ते बरामहाँ असि सूर्येत्यादित्यवतीषु गौरीवितेन स्तुयुः । पञ्चमेन पृष्ठेन त्रिवृत्तृतीयसवनं कुर्युः । तस्य कल्पः । परि प्र धन्वेति सफम् । पर्यूष्विति श्यावाश्वम् । पवस्व सोम महान्त्समुद्र इत्यान्धीगवम् । समानमितरं ज्योतिष्टोमेन ३ तस्य संपत् । सप्तदश बृहत्यो माध्यंदिनात् सवनादतिरिच्यन्ते । तावत्तृतीयसवनाल्लुप्यते । तत्संपन्नम् ४ तृतीयसवनादतिरिक्ते विष्णोः शिपिविष्टवतीषु गौरीवितेन स्युयुर्द्वितीयेनाग्निष्टोमसाम्ना ५ एतदन्यत्कुर्युरुक्थान्यन्यत्प्रणयेयुः ६ उक्थेभ्योऽतिरिक्तेऽतिरात्रः कार्यः ७ रात्रेरतिरिक्ते विष्णोः शिपिविष्टवतीषु बृहता स्तुयुस्त्रिवृता स्तोमेनोपरिष्टात् संधेः ८

इति प्रथमे प्रपाठके दशमः खराडः १०

## एकादशः खराडः

यदि दीक्षितानां प्रमीयेत तं दग्ध्वास्थीन्युपनह्य यो नेदिष्ठी स्यात्तं दीक्षयित्वा सह यजेरन् १ एतदन्यत्कुर्युः २ अभिषुत्यान्यत्सोमम् ३ हुतयोरुपांश्वन्तर्यामयोरगृहीतेष्वितरेषु ग्रहेषु पूर्वया द्वारोपनिष्क्रम्योत्तरेण मार्जालीयं दक्षिणामुखा आसीना यामेन स्तुवीरन् । सार्पराज्ञीषु अग्निमीडे पुरोहितमिति यस्य योनिस्त्रिकेण स्तोमेन । न स्तोमं युनक्ति । न यजमानं वाचयति । ता ऋचोऽनुब्रुवन्तस्त्रिः प्रसव्यं मार्जालीयं परीयुः । सव्यानूरून् आघ्नानाः पुनस्त्रिः प्रदक्षिणं परीत्यासंस्पृशन्तोऽनवेक्षमाणाः प्रत्याव्रज्याप उपस्पृश्यैन्द्रवायवाग्रान् ग्रहान् गृह्णीरन् ४ अग्न आयूँषि पवसे इति तस्याह्नः प्रतिपत्स्यात् ५ समानमितरं तेन ६ संवत्सरे ७ अस्थीनि याजयन्ते ८ असम्मितस्तोत्रो वा स्यात् ९ त्रिवृत्पवमानो वा सप्तदशावर्ती १० तस्य

त्रिवृत्पवमानस्यैष कल्पः ११ उच्चा ते जातमन्धस इति गायत्रमेकस्याम् । आमहीयवमेकस्याम् । आभीकमेकस्याम् । पुनानः सोम धारयेति रौरवमेकस्याम् । यौधाजयमेकस्याम् । कालेयमेकस्याम् । आयन्तीयं ब्रह्मसाम । वैखानसमच्छावाकसाम १२ विपरिहरत्यैन्द्रवायवमैत्रावरुणौ १३ समानमितरं ज्योतिष्टोमेन १४ तस्य संपत् । अष्टौ गायत्र्यः प्रातःसवनादतिरिच्यन्ते । सप्तदशाष्टाक्षराणि आयन्तीयात्सप्तदश द्वादशाक्षराणि वैखानसात्तावदुत्तराभ्यां च पवमानाभ्यामग्निष्टोमसाम्नश्च लुप्यन्ते । तत्संपन्नम् १५ ग्राव्णि विशीर्णे पुनानः सोम धारयेति रौरवमेकस्याम् । द्यौतानमेकस्याम् । वृत्रस्य त्वा श्वसथादीषमाणा इत्येतयोः पूर्वम् । दैर्घश्रवसमेकस्याम् । उद्वद्वा प्राजापत्यम् । यौधाजयं तिसृषु । समानमितरं ज्योतिष्टोमेन १६ अनुब्राह्मणं क्लृप्ताः । कर्मक्लृप्ताश्च १७ आहुतिकल्पाश्चाहुतिकल्पाश्च १८

इति प्रथमे प्रपाठके एकादशः खण्डः ११

इति क्षुद्रसूत्रे प्रथमः प्रपाठकः १

## द्वितीयः प्रपाठकः

### प्रथमः खण्डः

त्रयो वर्णकल्पाः ब्राह्मणस्य राज्ञो वैश्यस्य च १ ब्राह्मणस्य यजमानस्य क्लृप्तो ज्योतिष्टोमः २ राज्ञो यजमानस्य ३ अग्रयवती प्रतिपत् । बार्हतान्याज्यानि । बृहत्पृष्ठं श्यैतं ब्रह्मसाम श्रुध्यमुष्णिहि । समानमितरं ज्योतिष्टोमेन ४ वैश्यस्य यजमानस्य ५ वैश्यस्तोमस्य प्रतिपच्चाज्यानि च पृष्ठं च । ब्रह्मसाम च । समानमितरं ज्योतिष्टोमेन ६ अथात उभयसामानः ७ तेषां प्रथमो बृहत्पृष्ठो रथन्तराग्निष्टोमसामा ८ अपि चाभिजित्प्रतिरूप इत्याचक्षते ९ तस्य कल्पोऽग्रयवती प्रतिपत् । बार्हतान्याज्यानि । बृहत्पृष्ठम् । श्यैतं ब्रह्मसाम ।

श्रुध्यमुष्णिहि । पुरोजिती वो अन्धस इति श्यावाश्वमेकस्याम् । आन्धीगवमेकस्याम् । औदलमेकस्याम् । नौधसं वा । यज्ञायज्ञीयं तिसृषु । यज्ञायज्ञीयस्यर्क्षु रथन्तरमग्निष्टोमसाम । समानम्मितरं ज्योतिष्टोमेन १० अथातो रथन्तरपृष्ठो बृहदग्निष्टोमसामापि च विश्वजित्प्रतिरूप इत्याचक्षते ११ तस्य कल्पः । पुरोजिती वो अन्धस इति श्यावाश्वमेकस्याम् । आन्धीगवमेकस्याम् । औदलमेकस्याम् । श्यैतं वा । यज्ञायज्ञीयं तिसृषु । यज्ञायज्ञीयस्यर्क्षु बृहदग्नि-ष्टोमसाम । समानमितरं ज्योतिष्टोमेन १२

इति द्वितीये प्रपाठके प्रथमः खण्डः १

द्वितीयः खण्डः

अथातो रथन्तरपृष्ठा बृहदनुष्टुप्कास्त्रयः १ अपि चर्षभप्रतिरूपा इत्याचक्षते २ तेषां प्रथमस्य कल्पः । पुरोजिती वो अन्धस इति श्यावाश्वमेकस्याम् । आन्धीगवमेकस्याम् । औदलमेकस्याम् । बृहत्तिसृषु । समानमितरं ज्योतिष्टोमेनेति प्रथमः ३ अथ द्वितीयः । पुरोजिती वो अन्धस इति श्यावाश्वमेकस्याम् । आन्धीगव-मेकस्याम् । बृहदेकस्याम् । पुनश्चाभिनिवृत्य बृहता तृचं समापयति । समानमितरं ज्योतिष्टोमेनेति द्वितीयः ४ अथ तृतीयः । पुरोजिती वो अन्धस इति श्यावाश्वमेकस्याम् । तस्यामेवान्धीगवम् । तस्यां चैव बृहत् ५ उत्तरे च द्वे तिस्रः करोति ६ द्विर्द्विः पदमभ्यस्यम् ७ तासु बृहत् ८ समानमितरं ज्योतिष्टोमेन ९

इति द्वितीये प्रपाठके द्वितीयः खण्डः २

तृतीयः खण्डः

अथातो बृहत्पृष्ठा रथन्तरमाध्यंदिनास्त्रयः १ अपि च साहस्रप्रतिरूपा इत्याचक्षते २ तेषां प्रथमस्य कल्पः । साहस्रमाज्यबहिष्पवमानम्

। यथा प्रथमस्य ३ पुनानः सोम धारयेति रौरवं यौधाजयं दैर्घश्रवसमुद्वद्वा प्राजापत्यम् । त एकर्चाः । रथन्तरं तिसृषु सर्वासु प्रोहेयुः ४ बृहत्पृष्ठम् । श्यैतं ब्रह्मसाम । श्रुध्यमुष्णिहि । समानमितरं ज्योतिष्टोमेनेति प्रथमः ५ अथ द्वितीयः । ककुभावुत्तरे रथन्तरस्य करोति । ब्रह्मायतनीया सप्तदशस्य विष्टुतिर्होतुः पृष्ठस्य ६ समानमितरं पूर्वेण ७ तस्य संपत् । यथा संसुतसोमः । इति द्वितीयः ८ अथ तृतीयः । उच्चा ते जातमन्धस इति गायत्रं तिसृषु । आमहीयवमेकस्याम् । ऐडं कौत्समेकस्याम् । आभीकमेकस्याम् । सत्रासाहीयं वा । पुनानः सोमधारयेति रौरवमेकस्याम् । यौधाजयमेकस्याम् । वरुणसामैकस्याम् । रथन्तरं तिसृषु ९ नित्या सप्तदशस्य विष्टुतिः पृष्ठानाम् १० समानमितरं ज्योतिष्टोमेन ११ तस्य संपत् । षोडशाक्षराणि रथन्तराल्लुप्यन्ते । तावत्कौत्सवरुणसामभ्यामतिरिच्यते । तत् । संपन्नम् १२

इति द्वितीयप्रपाठके तृतीयः खण्डः ३

## चतुर्थः खण्डः

अथातः पुरोहितकुलीनस्य पुरोधामश्नुवानस्य १ तस्मिन्नुभे प्रतिपदावुभयान्याज्यानि । उभे पृष्ठे उभे ब्रह्मसामनी करोति २ तस्य कल्पः । उपास्मै गायता नरः पवस्व वाचो अग्रयः पवमानस्य ते कव इति तृचक्लृप्तं बहिष्पवमानम् ॥ उपास्मै गायता नरः पवस्व वाचो अग्रयः उपोषु जातमप्तुरमिति संभार्यस्तोत्रीय इति वा ॥ अग्न आ याहि वीतय इति राथन्तरं त्रीणि बार्हतानि । अग्निं दूतं वृणीमह इत्युभयान्याज्यानीति वा ॥ पुनानः सोम धारयेति रौरवमेकस्याम् । नौधसमेकस्याम् । दैर्घश्रवसमेकस्याम् । उद्वद्वा प्राजापत्यम् । यौधाजयं तिसृषु । रथन्तरं पृष्ठम् । बृहद्ब्रह्मसाम । पुरोजिती वो अन्धस इत्याकूपारं तिसृषु । परि त्यं हर्यतं हरिमिति यस्य योनिः

। श्यैतमेकस्याम् । श्यावाश्वमेकस्याम् । आन्धीगवमेकस्याम् । समानमितरं ज्योतिष्टोमेन ३ तस्य संपत् । द्वादशाष्टाक्षराण्याकूपारादतिरिच्यन्ते । तावत्पृष्ठानां ब्रह्मसाम्नो लुप्यते । तत् संपन्नम् ४
इति द्वितीये प्रपाठके चतुर्थः खण्डः ४

पञ्चमः खण्डः

अथैष एव सन् विपरीतः १ तस्मिन्नुभे प्रतिपदावुभयान्याज्यानि । उभे पृष्ठे उभे ब्रह्मसामनी करोति २ तस्य कल्पः । पवस्व वाचो अग्र्यः उपास्मै गायता नरः पवमानस्य ते कव इति तृचक्लृप्तं बहिष्पवमानम् ॥ पवस्व वाचो अग्र्यः उपास्मै गायता नरः पवस्वेन्दो वृषा सुतः इति संभार्यः स्तोत्रीय इति वा ॥ अग्निं दूतं वृणीमह इति बार्हतं त्रीणि राथन्तराणि । अग्न आयाहि वीतय इति उभयान्याज्यानीति वा ॥ पुनानः सोम धारयेति रौरवमेकस्याम् । श्यैतमेकस्याम् । दैर्घश्रवसमेकस्याम् । उद्वद्वा प्राजापत्यम् । यौधाजयं तिसृषु । बृहत् पृष्ठम् । रथन्तरं ब्रह्मसाम । पुरोजिती वो अन्धस इत्याकूपारं तिसृषु । परि त्यं हर्यतं हरिमिति यस्य योनिः । नौधसमेकस्याम् । श्यावाश्वमेकस्याम् । आन्धीगवमेकस्याम् । समानमितरं ज्योतिष्टोमेन २ तस्य संपद्यथा पूर्वस्य ३ अथातो यज्ञायज्ञीयानुरूपो बृहदग्निष्टोमसामा ४ तस्य कल्पः । यज्ञायज्ञीयमनुरूपे । गायत्रं स्तोत्रीयपर्यासयोः ५ उप शिक्षापतस्थुषः इति सफम् । यज्ञायज्ञीयस्यर्क्षु बृहदग्निष्टोमसाम । समानमितरं ज्योतिष्टोमेन ६ तस्य संपत् । द्वे अक्षरे बहिष्पवमानादतिरिच्येते । तावत्सफाल्लुप्यते । तत्संपन्नम् ७ अथातः षोडशसामा ८ तस्य रथन्तरबृहत्पृष्ठम् । नौधसश्यैतं ब्रह्मसाम । समानमितरं ज्योतिष्टोमेन ९ अथैष एव सन् विपरीतः । तस्य बृहद्रथन्तरं ब्रह्मसाम । समानमितरं ज्योतिष्टोमेन १०

इति द्वितीये प्रपाठके पञ्चमः खराडः ५

षष्ठः खराडः

अथातोऽष्टौ गर्भिणः १ तेषां प्रथमस्य कल्पः । रथन्तरस्य प्रथमोत्तमौ पर्यायौ । बृहतो मध्यमः । स्व एव स्तोत्रीय इति पृष्ठम् । नौधसस्य प्रथमोत्तमौ पर्यायौ । श्यैतस्य मध्यमः । स्व एव स्तोत्रीय इति ब्रह्मसाम । समानमितरं ज्योतिष्टोमेनेति पूर्वः २ अथोत्तरः । बृहतः प्रथमोत्तमौ पर्यायौ । रथन्तरस्य मध्यमः । स्व एव स्तोत्रीय इति पृष्ठम् । श्यैतस्य प्रथमोत्तमौ पर्यायौ । नौधसस्य मध्यमः । स्व एव स्तोत्रीय इति ब्रह्मसाम । समानमितरं ज्योतिष्टोमेनेति प्रगुणौ ३ अथ व्यतिषक्तौ ४ एत एव पृष्ठे । ब्रह्मसामनी एवान्योन्यस्य स्थानं व्यतिहरेत् ५ अथैत एव सन्तोऽजामिक्लृप्ताः ६ रथन्तरस्य प्रथमः पर्यायः । वारवन्तीयस्य द्वितीयः । रथनतरस्यैव स्तोत्रीये । बृह-तस्तृतीयः । इति पृष्ठम् । नौधसस्य प्रथमः पर्यायः । वाङ्निधनस्य क्रौञ्चस्य द्वितीयः । नौधसस्यैव स्तोत्रीये । श्यैतस्य तृतीयः । इति ब्रह्मसाम । समानमितरं ज्योतिष्टोमेन । इति पूर्वः ७ अथोत्तरो बृहतः प्रथमः पर्यायः । वारवन्तीयस्य द्वितीयः । बृहत एव स्तोत्रीये । रथन्तरस्य तृतीयः । इति पृष्ठम् । श्यैतस्य प्रथमः पर्यायः । वाङ्निधनस्य क्रौञ्चस्य द्वितीयः । श्यैतस्यैव स्तोत्रीये । नौधसस्य तृतीयः । इति ब्रह्मसाम ८ समानमितरं ज्योतिष्टोमेन । इति प्रगुणौ ९ अथ व्यतिषक्तौ । एते एव पृष्ठे । ब्रह्मसामनी एवान्योन्यस्य स्थानं व्यतिहरेत् १० अथानेनैव ज्योतिष्टोमेन यजमानो विद्यात् । उभयसाम्ना यजत इति ११ यत्र रथन्तरं पृष्ठं नौधसेन तत्र बृहदुपाप्तम् १२ यत्र बृहच्छ्यैतेन तत्र रथन्तरम् १३ बृहद्रथन्तरे वै रूपपरोक्षे श्यैतनौधस इति हि भवतीति १४ अथातो दशरात्रप्रबर्हः १५ प्रथमस्याह्नो बहिष्पवमानं प्रथमं चाज्यम् । द्वितीयस्य द्वितीयम् ।

तृतीयस्य तृतीयम् । चतुर्थस्य चतुर्थम् । पञ्चमस्याह्नो माध्यंदिनः पवमानः । षष्ठस्याह्नो होतुः पृष्ठम् । सप्तमस्य द्वितीयम् । अष्टमस्य तृतीयम् । नवमस्य चतुर्थम् । दशमस्याह्नः आर्भवश्चाग्निष्टोमसाम च । सर्वाणि स्वस्तोमानि १६ अथातो द्वादशाहप्रबर्होऽतिरात्रस्य बहिष्पवमानम् । प्रथमस्याह्नः प्रथममाज्यम् । द्वितीयस्य द्वितीयम् । तृतीयस्य तृतीयम् । चतुर्थस्य चतुर्थम् । पञ्चमस्याह्नो माध्यंदिनः पवमानः । षष्ठस्याह्नो होतुः पृष्ठम् । सप्तमस्य द्वितीयम् । अष्टमस्य तृतीयम् । नवमस्य चतुर्थम् । दशमस्याह्न आर्भवः । अतिरात्र-स्याग्निष्टोमसाम । सर्वाण्येव स्वस्तोमानि १७

इति द्वितीये प्रपाठके सप्तमः खण्डः ७

## अष्टमः खण्डः

अथातः सवनप्रबर्हा भवन्ति चत्वारः १ प्रथमस्याह्नः प्रातःसवनम् । चतुर्थस्य माध्यंदिनं सवनम् । सप्तमस्य तृतीयसवनम् २ द्वितीयस्य प्रातःसवनम् । पञ्चमस्य माध्यंदिनं सवनम् । अष्टमस्य तृतीयसवनम् ३ तृतीयस्य प्रातःसवनम् । षष्ठस्य माध्यंदिनं सवनम् । नवमस्य तृतीयसवनम् ४ अतिरात्रस्य प्रातःसवनम् । दशमस्य माध्यंदिनं सवनम् । अतिरात्रस्यैव तृतीयसवनम् । सर्वाणि स्व-स्तोमानि ५ अथातः सवनप्रबर्हा एव चत्वारः ६ प्रथमस्याह्नः प्रातःसवनम् । द्वितीयस्य माध्यंदिनं सवनम् । तृतीयस्य तृतीयसवनम् ७ चतुर्थस्य प्रातःसवनम् । पञ्चमस्य माध्यंदिनं सवनम् । षष्ठस्य तृतीयसवनम् ८ सप्तमस्य प्रातःसवनम् । अष्टमस्य माध्यंदिनं सवनम् । नवमस्य तृतीयसवनम् ९ अतिरात्रस्य प्रातःसवनम् । दशमस्य माध्यंदिनं सवनम् । अतिरात्रस्यैव तृतीयसवनम् । सर्वाण्येव स्वस्तोमानि १०

इति द्वितीये प्रपाठके अष्टमः खण्डः ८

नवमः खराडः

अथात आवापवानेकाहोऽपि चर्त्विगपोहन इत्याचक्षते १ अन्तरेणा- नुरूपपर्यासौ २ गायत्राणि पावमानानि तृचसूक्तान्यावपेद्यावन्ति कामयेत ३ अन्तरेण गायत्रामहीयवे गायत्रीसामान्यावपेद्यावन्ति कामयेत । अन्तरेण रौरवयोधाजये बार्हतानि सामान्यावपेद्यावन्ति कामयेत ४ अन्तरेण गायत्रसंहिते गायत्रीसामान्यावपेद्यावन्ति का- मयेत । अन्तरेण श्यावाश्वान्धीगवे आनुष्टुभानि सामान्यावपेद्यावन्ति कामयेत ५ यथापथम् ६ यथा वाजामि कल्पयिष्यन्मन्येत तथा कल्पं कुर्वीत ७ विष्टुतिस्तोत्राणयावर्तीनि भवन्ति ८ अथातः श्रीस्तोमाश्चत्वारोऽपि च वाचस्तोमा इत्याचक्षते ९ एकया प्रथमस्य बहिष्पवमानम् । दशभिर्द्वितीयस्य । शतेन तृतीयस्य । सहस्रेण चतुर्थस्य १० अथात ऊर्ध्वं दशक्रमात् ११ दशभिर्होतुराज्यम् । शतेन मैत्रावरुणस्य । सहस्रेण ब्राह्मणाच्छंसिनः । अयुतेनाच्छा- वाकस्य । प्रयुतं माध्यंदिनः पवमानः । नियुतं होतुः पृष्ठम् । अर्बुदं मैत्रावरुणस्य । न्यर्बुदं ब्राह्मणाच्छंसिनः । निखर्वमा- च्छावाकस्य । बद्वमार्भवः । अक्षितमग्निष्टोमसाम १२ अक्षित- मार्भवो व्योमाग्निष्टोमसाम १३ व्योमार्भवोऽनन्तोऽग्निष्टोमसाम १४ अनन्त आर्भवः । सर्वमग्निष्टोमसाम १५ अथातो ब्रह्मसामपृष्ठा- वेकाहौ । अपि च तनुपृष्ठावित्याचक्षते । ब्रह्मसामनी पृष्ठे पृष्ठे ब्रह्मसामनी सस्तोत्रीये सधर्मणी । तौ ब्रह्मसामपृष्ठावेकाहावेकाहौ १६

इति द्वितीये प्रपाठके नवमः खराडः ९

द्वितीये प्रपाठके दशमः खराडः

अथातः षडहस्य पृष्ठतो विचाराः १ बृहद्रथन्तरपृष्ठः षडहः समूढः २ तस्य कल्पो यथा पृष्ठ्यस्तोमस्य यद्याहीनिकः ३ अथ यदि सात्रिकः स एव सन् गौरीवितस्वरः ४ अथातो नानापृष्ठ्यः षडहः ५ समूढो वा व्यूढो वा ६ समूढस्त्वेव ७ तस्य कल्पो यथर्तूनां षडहस्य यद्याहीनिकः ८ अथ यदि सात्रिकः स एव सन् गौरी-वितस्वरः ९ अथातः परोक्षपृष्ठः षडहः १० तस्य कल्पः । प्रथम-स्याह्नोऽभि त्वा शूरनोनुम इति कण्वरथन्तरं पृष्ठम् । द्वितीयस्याह्नः त्वामिद्धि हवामह इति बृहन्निधनं वार्कजम्भम् । कण्वबृहद्वा । आ त्वा सहस्रमाशतम् इत्येतेषां द्वितीयम् । प्रज्ञातपृष्ठ उत्तरश्चतुरहः ११ अथातः सर्वपरोक्षपृष्ठः षडहः १२ तस्य कल्पः । एते एव प्रथमद्वितीययोरह्नोः पृष्ठे १३ तृतीयस्याह्नो यद्याव इन्द्र ते शतमिति ह्रस्वाबृहदोपशा । अन्तरिक्षं वा १४ अन्तरिक्षस्य लोकेऽङ्गोवैरूपमनु कल्पयेत् १५ महावैष्टम्भं वा १६ महावैष्टम्भस्य लोकेऽभिनिधनं काण्वम् १७ चतुर्थस्याह्नः पिबा सोममिन्द्र मन्दतु त्वेत्यृषभोवैराजः सहोदैर्घतमसं वा हाउ पिबेत्येतत् १८ वसिष्ठस्य वा वैराजमग्निं नर इत्येतयोरुत्तरम् १९ पञ्चमस्याह्नस्त्रिकद्रुकेषु महिषो यवाशिरमिति नित्यवत्साः २० अतीषङ्गाणां वा प्रथममिन्द्रायाहि चित्रभानो यदि-न्द्रचित्रम् इह नेत्येतासु गायत्रीषु चानुष्टुप्सु च २१ षष्ठस्याह्नो वारवन्तीयं पृष्ठम् २२ रेवतीनां लोके दार्ढच्युतम् २३ विपरिहरत्यौक्ष्णोरन्ध्रे २४

इति द्वितीये प्रपाठके दशमः खण्डः १०

## एकादशः खण्डः

अथात उभयतः परोक्षपृष्ठः षडहः १ ऋक्तश्चैव सामतश्च २ तस्य कल्पः । प्रथमस्याह्नोऽभित्वा पूर्वपीतये इति कण्वरथन्तरं पृष्ठम् ३ द्वितीयस्याह्नस्त्वं ह्येहि चेरव इति बृहन्निधनं वार्कजम्भम् । कण्व-

बृहद्वा । आ त्वा सहस्रमाशतमित्येतेषां द्वितीयम् ४ तृतीयस्याह्नो यदिन्द्र यावतस्त्वमिति ह्रस्वा बृहदोपशा । अन्तरिक्षं वा ५ अन्तरिक्षस्य लोकेऽञ्जोवैरूपमनुकल्पयेत् । महावैष्टम्भं वा ६ महावैष्टम्भस्य लोकेऽभिनिधनं काण्वम् ७ चतुर्थस्याह्नः श्रुधी हवं विपिपानस्याद्रेरित्यृषभोवैराजः सहोदैर्घतमसं वा हाउ पिबेत्येतत् ८ वसिष्ठस्य वा वैराजमग्निं नर इत्येतयोरुत्तरम् ९ पञ्चमस्याह्नःप्रोष्वस्मै पुरोरथमिति नित्यवत्साः १० अतीषङ्गाणां वा प्रथममिन्द्रायाहि चित्रभानो यदिन्द्र चित्रम इह नेत्येतासु गायत्रीष्वनुष्टुप्सु च ११ षष्ठस्याह्नो रेवाँ इन्द्रेवत स्तोतेति वारवन्तीयं पृष्ठम् १२ रेवतीनां लोके चार्ढच्युतम् १३ विपरिहरत्यौक्ष्णोरन्ध्रे १४

इति द्वितीये प्रपाठके एकादशः खण्डः ११

## द्वादशः खण्डः

अथात उपाङ्क्यपृष्ठश्चान्वाहार्यपृष्ठश्च षडहौ १ तयोः कल्पः । प्रत्यक्षाणि पृष्ठानि प्रत्यक्षेषु पृष्ठस्तोत्रीयेषु परोक्षाणि माध्यंदिनेषु । बृहतीषु पञ्चानामह्नाम् । गायत्रीषु षष्ठस्य । स उपाङ्क्यपृष्ठः षडहः २ तान्येवोपरिष्टादार्भवेष्वनुष्टुप्सु पञ्चानामह्नाम् । गायत्रीषु षष्ठस्य । सोऽन्वाहार्यपृष्ठः षडहः ३ अथात उपाङ्क्यपृष्ठश्चैवान्वाहार्यपृष्ठश्च षडहौ ४ तयोः कल्पो विपर्यासं बृहद्रथन्तरे पृष्ठे ५ उत्तरस्य चतुरहस्य ६ परोक्षाणि माध्यंदिनेषु । बृहतीषु त्रयाणामह्नाम् । गायत्रीषु षष्ठस्य । स उपाङ्क्यपृष्ठः षडहः ७ तान्येवोपरिष्टादार्भवेषु । अनुष्टुप्सु त्रयाणामह्नाम् । गायत्रीषु षष्ठस्य । सोऽन्वाहार्यपृष्ठः षडहः ८ अथातः पुरस्ताज्ज्योतिश्चोपरिष्टाज्ज्योतिश्च षडहौ ९ तयोः कल्पः । परोक्षाणि पृष्ठानि प्रत्यक्षेषु पृष्ठस्तोत्रीयेषु प्रत्यक्षाणि माध्यंदिनेषु । बृहतीषु पञ्चानामह्नाम् । गायत्रीषु षष्ठस्य । स पुरस्ताज्ज्योतिः षडहः १० तान्येवोपरिष्टादार्भवेषु । अनुष्टुप्सु पञ्चानामह्नाम् । गायत्रीषु

षष्ठस्य । स उपरिष्टाज्ज्योतिः षडहः ११ अथातो बृहद्रथन्तरपुरस्ताज्ज्योतिश्च बृहद्रथन्तरोपरिष्टाज्ज्योतिश्च षडहौ १२ तयोः कल्पः । परोक्षाणि पृष्ठानि परोक्षेषु पृष्ठस्तोत्रीयेषु बृहद्रथन्तरे मध्यंदिनेषु बृहतीषु विपर्यासम् । स बृहद्रथन्तरपुरस्ताज्ज्योतिः षडहः १३ त एवोपरिष्टादार्भवेष्वनुष्टुप्सु विपर्यासम् । स बृहद्रथन्तरोपरिष्टाज्ज्योतिः षडहः १४

इति द्वितीये प्रपाठके द्वादशः खण्डः १२

त्रयोदशः खण्डः

अथात आपर्क्यपृष्ठौ षडहौ ॥ परोक्षापर्क्यपृष्ठश्च प्रत्यक्षापर्क्यपृष्ठश्च १ तयोः कल्पः । प्रत्यक्षस्य प्रथमोत्तमौ पर्यायौ । परोक्षस्य मध्यमः । स परोक्षापर्क्यपृष्ठः षडहः २ परोक्षस्य प्रथमोत्तमौ पर्यायौ । प्रत्यक्षस्य मध्यमः । स प्रत्यक्षापर्क्यपृष्ठः षडहः ३ अथातः प्राङ्क्यपृष्ठौ षडहौ ॥ परोक्षप्राङ्क्यपृष्ठश्च प्रत्यक्षप्राङ्क्यपृष्ठश्च ४ तयोः कल्पः । परोक्षस्य प्रथमः पर्यायः । प्रत्यक्षस्योत्तरौ । स परोक्षप्राङ्क्यपृष्ठः षडहः ५ प्रत्यक्षस्य प्रथमः पर्यायः । परोक्षस्योत्तरौ । स प्रत्यक्षप्राङ्क्यपृष्ठः षडहः ६ अथात उपाङ्क्यपृष्ठौ षडहौ । परोक्षोपाङ्क्यपृष्ठश्च प्रत्यक्षोपाङ्क्यपृष्ठश्च ७ तयोः कल्पः । प्रत्यक्षस्य पूर्वौ पर्यायौ । परोक्षस्योत्तमः । स परोक्षोपाङ्क्यपृष्ठः षडहः ८ परोक्षस्य पूर्वौ पर्यायौ प्रत्यक्षस्योत्तमः । स प्रत्यक्षोपाङ्ङ्क्यपृष्ठः षडहः ९

इति द्वितीये प्रपाठके त्रयोदशः खण्डः १३

चतुर्दशः खण्डः

अथातो बृहद्रथन्तरपृष्ठः सन् षडहोऽनुगृहीतपृष्ठः १ तस्य कल्पः । तृतीयस्याह्नो वैरूपं मध्यंदिने बृहत्यामनुक्लृप्तम् । चतुर्थस्याह्नो

वैराजमार्भवेऽनुष्टुभि । पञ्चमस्याह्नः शक्वर्यो मध्यंदिने बृहत्यामनुक्लृप्ताः । षष्ठस्याह्नो रेवत्य आर्भवे गायत्र्याम् । सोऽनुगृहीतपृष्ठः षडहः २ अथातो बृहद्रथन्तरपृष्ठ एव सन् षडहोऽनुगृहीतपरोक्षः ३ तस्य कल्पः । प्रत्यक्षाणां स्थाने परोक्षाणि । सोऽनुगृहीतपरोक्षः षडहः ४ अथातो नानापृष्ठः सन् षडहोऽनुगृहीतबृहद्रथन्तरः । तस्योक्तः कल्पः कर्मणि ५ अथातो नानापृष्ठ एव सन् षडहोऽनुगृहीतपरोक्षतरः ६ तस्य कल्पः । प्रत्यक्षयोः स्थाने परोक्षाणि । सोऽनुगृहीतपरोक्षतरः षडहः ७ अथातो ब्रह्मसामपृष्ठः षडहः ८ अपि च तनुपृष्ठ इत्याचक्षते ९ ब्रह्मसामानि पृष्ठानि पृष्ठानि ब्रह्मसामानि सस्तोत्रीयाणि सधर्माणि । स ब्रह्मसामपृष्ठः षडहः १० अथात एकविंशत्यहे पृष्ठ्यमन्तरुपयन्तः तृतीयषष्ठे अहनी सस्तोमे सतन्त्रे सपृष्ठे ससंस्थे व्यतिहरेयुः ११ स्तोमौ वैनयोर्व्यतिहरेयुः १२ सप्तदशं वोद्धृत्य प्राचः स्तोमान् समूह्य षष्ठतन्त्रे सप्तदशं कल्पयेयुः १३ प्रसिद्धं त्वेवोपेयूरथन्तरपृष्ठमेव १४ संवत्सरे षडहस्य पृष्ठतो विचाराः १५ ते विश्वजितः १६

इति द्वितीये प्रपाठके चतुर्दशः खण्डः १४

## पञ्चदशः खण्डः

अथातो द्वादशाहाः १ चत्वारो भरतद्वादशाहाः २ तेषां प्रथमस्य कल्पोऽयमेव ज्योतिष्टोमः । अविक्लृप्तः ॥ द्वादशाहक्लृप्त इति प्रथमः ३ अथ द्वितीयः । एतस्यैव सतोऽतिरात्रावभितो दशाग्निष्टोमा मध्यतः । इति द्वितीयः ४ अथ तृतीयः । एतस्यैव सतोऽतिरात्रावभितो बृहद्रथन्तरपृष्ठानि दशाहानि मध्यतः ५ तेषां प्रथमस्य कल्पः । पुरोजिती वो अन्धसः इति गौरीवितमेकस्याम् । पदनिधनं शुद्धाशुद्धीयमेकस्याम् । श्यावाश्वमेकस्याम् । आन्धीगवं तिसृषु । समानमितरं ज्योतिष्टोमेन । इति रथन्तरम् ६ अथ बार्हतम् ।

अग्रियवती प्रतिपत् । बार्हतान्याज्यानि । बृहत्पृष्ठम् । श्यैतं ब्रह्मसाम । श्रुध्यमुष्णिहि । पुरोजिती वो अन्धस इति गौरीवितमेकस्याम् । मधुश्चुन्निधनमेकस्याम् । श्यावाश्वमेकस्याम् । आन्धीगवं तिसृषु । समानमितरं ज्योतिष्टोमेन । एताभ्यामेव विपर्यासं दशाहानि मध्यतः । इति तृतीयः ७ अथ चतुर्थः । एतस्यैव सतः षोडशिमन्तावतिरात्रावभितोऽग्निष्टोमावन्तराष्टौ मध्य उक्थ्याः । षोडशिमच्चतुर्थमहरुभयसाम सप्तमं बृहत्पृष्ठं कण्वरथन्तरमध्यंदिनम् ८ तस्य कल्पो बार्हतस्याह्नः साकमश्वं सौभरमाष्टादंष्ट्रमित्युक्थानि ९ प्रमꣳहिष्ठीयं हारिवर्णं तैरश्चमिति राथन्तरस्य १० चतुर्थस्याह्नो नानदं स्वरमाष्टादंष्ट्रस्य लोके नार्मेधम् । प्रत्यस्मै पिपीषते इति गौरीवितं षोडशिसाम ११ सप्तमस्याह्नः । पुनानः सोमधारया इति रौरवमेकस्याम् । कण्वरथन्तरमेकस्याम् । मैधातिथमेकस्याम् । यौधाजयं तिसृषु १२ यद्यु वै कण्वरथन्तरं तृचस्थं चिकीर्षेत् । कण्वरथन्तरयौधाजये अन्योन्यस्य स्थानं व्यतिहरेत् १३ उद्वंशीयान्तानि षष्ठनवमयोरह्नोरुक्थानि बार्हतं षष्ठमहर्बार्हतं सप्तमं राथन्तरमष्टमं बार्हतं नवमं राथन्तरं दशमम् । तस्मिन्त्सार्पराज्ञम् १४

इति द्वितीये प्रपाठके पञ्चदशः खण्डः १५

## षोडशः खण्डः

अथातस्त्रयस्त्रिकद्रुकद्वादशाहाः १ तेषां प्रथमस्य कल्पोऽतिरात्रावभितो दशकृत्वो गोआयुषी मध्यतो विपर्यासम् २ ते सर्वे ऐकाहिकाः गौरीवितस्वराः ३ अतिरात्रावभितोऽष्टौकृत्वो गोआयुषी मध्यतो विपर्यासं ज्योतिष्टोमः प्रथमदशमेऽहनी ४ ते सर्वे ऐकाहिका गौरीवितस्वराः ५ अतिरात्रावभितस्त्रिस्त्रिकद्रुकानूर्ध्वानुपयन्ति ज्योतिष्टोम एव दशममहः ६ ते सर्वे ऐकाहिका गौरीवितस्वराः ७ अथातः सुकरजातयः ८ अपि च निकायिन इत्याचक्षते ९ अतिरात्रावभितो

दशकृत्वो ज्योतिष्टोमो मध्यतोऽविक्लृप्तः । स ज्योतिर्द्वादशाहः १० अतिरात्रावभितो दशकृत्वो गोष्टोभो मध्यतोऽविक्लृप्तः । स गो-द्वादशाहः ११ अतिरात्रावभितो दशकृत्व आयुष्टोमो मध्यतोऽविक्लृप्तः । स आयुर्द्वादशाहः १२ एवमेवाभिजिद्द्वादशाहः १३ एवं विश्व-जिद्द्वादशाहः । एवं सर्वजिद्द्वादशाहः १४ एतेन प्रदेशेन यावन्तो-ऽहीनैकाहास्तावन्तो द्वादशाहाः इति प्रदिशन्ति १५ अभ्यासान्त-र्हितैरविक्लृप्तैर्दशाहानि पूरयेत् १६ यत्राभ्यासो नोपपद्येत ज्योतिष्टोमेन तत्र पूरयेदिति । पूरयेदिति १७

इति द्वितीये प्रपाठके षोडशः खण्डः १६

इति क्षुद्रकल्पसूत्रे द्वितीयः प्रपाठकः २

## तृतीयः प्रपाठकः

### प्रथमः खण्डः

अथातोऽस्यैव सतो विचारान् वेदयिष्यामहे द्वादशाहस्य १ बृहद्रथन्तरपृष्ठो द्वादशाहः स्यादित्याहुः । कस्य हेतोरिति २ भूम्ना ३ अस्य बृहद्रथन्तरपृष्ठान्यहानि भवन्ति । प्रथमश्च द्व्यहः । उत्तरश्च-तुरहः । भूम्नो वशं नेष्याम इत्येतस्य हेतोरिति ४ अथापरम् । रथन्तरं परोक्षं वैरूपम् । बृहत्परोक्षं वैराजम् । रथन्तरं परोक्षं शक्वर्यः । बृहत्परोक्षं रेवत्यः । ययोरियं परोक्षकृतिर्हन्त ते एव साक्षात् करवाणीति ५ स खलु बृहद्रथन्तरपृष्ठः सन्त्समूढः ६ कथं हि बृहद्रथन्तरपृष्ठः सन्न समूढः स्यादिति ७ उक्तः पृष्ठ्यस्य समूढः ८ उक्तश्छन्दोमानाम् । यथा छन्दोमवति दशरात्रे ९ तथा ते सन्तो गौरीवितस्वराः १० नवमादह्नोऽर्कः प्रच्यवते तमनुष्टुभ्यनुगृह्णाति ११ तस्योक्तः कल्पः १२ समापद्यन्ते दशमेऽहनि सामानि । यथा छन्दोमदशमाहे तथा दशममहरिति १३ एष बृहद्रथन्तरपृष्ठो द्वाद-शाहस्तेनैतेन प्रतिष्ठाकामो यजेत । प्रतिष्ठा वै बृहद्रथन्तरे साम्नामिति

हि भवति १४ अथातो नानापृष्ठो द्वादशाहः स्यादित्याहुः । सोऽयमेव द्वादशाहो यमिमं वयमधीमहे १५

इति तृतीय प्रपाठके प्रथमः खण्डः १

द्वितीयः खण्डः

अथातो विराट्संपन्नो द्वादशाहः स्यादित्याहुः १ कस्य हेतोरिति । विराडपचिता यज्ञक्रतवो भवन्ति । विराजो हि सर्वेषु यागेषु सर्वाणि स्तोमच्छन्दांसि प्रतिष्ठितानि भवन्ति २ सोऽयं पुरा द्वादशाहः संपरे-तो विराजं संपद्यते । स यथा मेऽहरहश्च विराजं संपत्स्यते संपरेतश्च तथा करवाणीति ३ तस्य षोडशिकावतिरात्रावभितः स्यातां पञ्चदशे पृष्ठानां ब्रह्मसाममैत्रावरुणसामनी स्याताम् । अत्र विराजं संपद्येते ४ चत्वारिंशच्च चत्वारि च शतान्यन्यतरस्यातिरात्रस्य स्तोत्रीया-स्तथान्यतरस्य ५ द्वाचत्वारिंशच्च पुरा भवन्ति ६ तत्प्रथमस्याह्नः पञ्चदशं तृतीयसवनं स्यात् । अत्र तद्विराजं संपद्यतेऽष्टशतं पुरा स्तोत्रीया भवन्ति । ता अद्य विंशतिशतं संपन्नाः ७ अथ पराण्यहानि । सर्वाण्येव स्युः षोडशिमन्ति ८ आसितं त्वाष्ट्रीसामाविक्लृप्तं चतुर्थमहस्त्वाष्ट्रीसाम क्रौञ्चमेतानि स्युः षोडशिसामानि ९ आनुष्टुभेषु तृचेष्वैन्द्रेषु हरिवत्सु सामान्येषु १० यदि सामान्या न विद्येर-न्नप्यसामान्याः स्युः ११ यद्यु हरिवत्यो न विद्येरन्नप्यहरिकास्वेव स्युः १२ तत्र सर्व एव पञ्चदशस्तोमाः स्युः षोडशिनः १३ एतद्ध स्माह खल्वस्य धानंजय्यो व्याचष्टे १४ अथ ह स्माह शाण्डिल्य इहैव खल्विमानि गौरीवितस्य लोकं संप्रत्यवेतानि स्युरिति १५ अथ गौरीवितमेवाहरहः षोडशिसाम स्यात् १६ नित्यसंपन्नाश्छन्दोमा विराजम् । षष्टिश्च त्रीणि च शतानि सप्तमस्याह्नः स्तोत्रीयाः । षष्टिश्चैव षट् च शतान्यष्टमस्य । विंशतिश्च सप्त च शतानि नवमस्य । त्रिशतस्तोत्रीयं दशममहः संपद्यते सह नु सार्पराज्ञेन १७ तदु

चेद्ब्रूयुरस्तोत्रं वा एतद्यत्सार्पराज्ञम् । मनआख्यं हि मनसा स्तौति १८ आन्धीगवादुत्तरं पवस्व सोम मन्दयन्नित्येतासु द्विपदासु श्रेयः कल्पयेत् १९ अत्रास्योभे भद्रश्रेयसी कृते भवतः । षडहान्ते ह भद्रम् । दशरात्रान्ते श्रेय इति २० एष विराट्संपन्नो द्वादशाहः । तेनैतेनान्नाद्यकामो यजेत । अन्नं विराडिति हि भवतीति २१

इति तृतीये प्रपाठके द्वितीयः खण्डः २

## तृतीयः खण्डः

अथातोऽनुरूपाग्निष्टोमसामा द्वादशाहः स्यादित्याहुः १ कस्य हेतोरिति । पृष्ठाग्निष्टोमसामनी खलु कल्पस्य समाधिं तं तमेव भवतः । यथा ह्येव पृष्ठेन कल्प आख्यात एवमप्यग्निष्टोमसाम्ना कल्प आख्यायते । ते चेत्समाधास्यतां यज्ञमेवमयं सर्वो दशरात्रः समाधिं गमिष्यतीति २ तत्प्रथमस्याह्नो देवो वो द्रविणोदा इत्येष वासिष्ठः प्रगाथो वासिष्ठं रथन्तरं तस्मिन्त्स्यात् । कण्वरथन्तरमग्निष्टोमसाम । तत्सदृशं भवति रथन्तरेण ३ वासिष्ठं नु भवति यथा रथन्तरम् । प्रागाथिकं यथा रथन्तरम् । ककुबुत्तरासु यथा रथन्तरम् । प्रणयस्तगीति यथा रथन्तरम् । बहुसदृशं रथन्तरेण भवतीति ४ तद्रथन्तरं पृष्ठं कण्वरथन्तरमग्निष्टोमसाम । अत्रैव ते समाधिमितः ५ यज्ञायज्ञीयमत्रान्त्यं स्यात्कावस्यर्त्तु । कावमतः प्रच्यवेतेति ६

इति तृतीये प्रपाठके तृतीयः खण्डः ३

## चतुर्थः खण्डः

द्वितीयस्याह्नः कण्वबृहदग्निष्टोमसाम । अस्यर्त्तु आ त्वा सहस्रमाशतमित्येषां द्वितीयम् । तत्पृष्ठं कण्वबृहदग्निष्टोमसाम । अत्रैव ते समाधिमितः १ यज्ञायज्ञीयमेवात्रान्त्यं स्याद्यामस्यर्त्तु याममतः प्रच्यवेतेति । एतद्ध स्म खल्वस्य धानंजय्यो व्याचष्टे २ अथ

ह स्माह शाण्डिल्यो यज्ञायज्ञीयमेवात्राग्निष्टोमसाम स्यात् । एतद्वा सदृशं भवति बृहता ३ भारद्वाजीषु न दृष्टं भवति यथा बृहत् । प्रागाथिकं यथा बृहत् । ककुबुत्तरासु यथा बृहत् । उदात्तगीति यथा बृहत् । बहुसदृशं बृहता भवतीति ४

इति तृतीये प्रपाठके चतुर्थः खण्डः ४

पञ्चमः खण्डः

तृतीयस्याह्नोऽग्न आयाह्यग्निभिरित्येष आङ्गिरसः प्रगाथ आङ्गिरसं वैरूपम् । तस्मिन्त्स्याद् अन्तरिक्षमग्निष्टोमसाम । अन्तरिक्षस्य लोकेऽञ्जोवैरूपमनुकल्पयेत् । तत्सदृशं भवति वैरूपेण १ आङ्गिरसं नु भवति यथा वैरूपम् । प्रागाथिकं यथा वैरूपम् । सर्वबृहतीषु यथा वैरूपम् । पञ्चनिधनं यथा वैरूपम् । अध्यर्धेडं यथा वैरूपम् । निधनेनापि सदृशदेशीये भवतः । उभयत्र ह्येव शिशुप्रवादो भवतीति २ तज्जामि स्यादरिष्टेनैडं ह्येवारिष्टमैडमन्तरिक्षम् । यज्ञायज्ञीयमत्रान्त्यं कृत्वानुष्टुभ्यरिष्टमनुकल्पयेत् । गौरीवितमेक-स्याम् । अरिष्टमेकस्याम् । स्वारं त्वाष्ट्रीसामैकस्याम् । त्रिणिधनं त्वाष्ट्रीसाम त्रिष्विति कुर्यादिति ३ यद्यु वा अरिष्टं तृचस्थं चिकी-र्षेदरण्येगेयमिदमपचितमित्यरिष्टत्रिणिधने अन्योन्यस्य स्थानं व्यति-हरेत् ४

इति तृतीये प्रपाठके पञ्चमः खण्डः ५

षष्ठः खण्डः

चतुर्थस्याह्नो वसिष्ठस्य वैराजमग्निष्टोमसाम स्वासु अग्निन्नर इत्येतयोरुत्तरम् । तत्सदृशं भवति वैराजेन १ वासिष्ठं नु भवति यथा वैराजम् । त्रैपदं यथा वैराजम् । ईनिधनं यथा वैराजम् । अनुतुन्नं यथा वैराजम् । पदान्तेऽस्यानुतुदति यथा वैराजम् । अथापि

वैराजं पृष्ठम् । वसिष्ठस्य वैराजमग्निष्टोमसाम । कः सादृश्यमतो भूयो ब्रूयादिति २ तज्जामि स्यात् वात्सप्रेणेनिधनं ह्येव वात्सप्रम् । ईनिधनं वसिष्ठस्य वैराजम् । यज्ञायज्ञीयमेवात्रान्त्यं कृत्वानुष्टुभि वात्सप्रमनुकल्पयेत् । नानदमेकस्याम् । वात्सप्रमेकस्याम् । श्यावाश्वमेकस्याम् । आन्धीगवं तिसृष्विति कुर्यादिति ३ यद्यु वै वात्सप्रं तृचस्थं चिकीर्षेन्निधनविभक्तिरपचितेति वात्सप्रान्धीगवे अन्योन्यस्य स्थानं व्यतिहरेत् ४

इति तृतीये प्रपाठके षष्ठः खण्डः ६

## सप्तमः खण्डः

पञ्चमस्याह्नोऽग्निं होतारं मन्ये दास्वन्तमित्येता आग्नेय्योऽतिच्छन्द-सस्तासु नित्यवत्सा अग्निष्टोमसाम । ताः सदृश्यो भवन्ति शक्वरीभिः १ अतिच्छन्दसो नु भवन्ति यथा शक्वर्यः । स्त्रीनाम्न्यो यथा शक्वर्यो गणनाम्न्यो यथा शक्वर्य ऊधस्वत्यो यथा शक्वर्यो वत्सवत्यो यथा शक्वर्योऽथकारवत्यो यथा शक्वर्योऽध्यर्धेडा यथा शक्वर्यः सप्तपदा यथा शक्वर्योऽरण्येगेया यथा शक्वर्यो बहुसदृश्यः शक्वरी-भिर्भवन्तीति २ तत्रानुष्टुभि यज्ञायज्ञीयमनुकल्पयेद् । गौरीवित-मेकस्याम् । ऋृषभः शाक्वर एकस्याम् । पदनिधनं शुद्धाशुद्धी-यमेकस्याम् । पार्थं चाष्टेडश्च पदस्तोभश्च तृचयोः । यज्ञायज्ञीयं तिसृष्विति कुर्यादिति ३

इति तृतीये प्रपाठके सप्तमः खण्डः ७

## अष्टमः खण्डः

षष्ठस्याह्नो वारवन्तीयमग्निष्टोमसाम । स्वासु यच्छन्दस्यमाश्वा औहो वेत्येतत् । तद् वारवन्तीयं पृष्ठम् । वारवन्तीयमग्निष्टोमसाम । कः सादृश्यमतो भूयो ब्रूयादिति १ तत्रानुष्टुभि यज्ञायज्ञीयमनुकल्पयेत्

। गौरीवितमेकस्याम् । मधुश्चुन्निधनमेकस्याम् । आकूपारमेकस्याम् । यन्नवमेऽहनि क्रौञ्चे तृचयोः । यज्ञायज्ञीयं तिसृष्विति कुर्यादिति २

इति तृतीये प्रपाठकेऽष्टमः खण्डः ८

नवमः खण्डः

यथा द्वितीयस्यैवं सप्तमस्य १ यद्यु ह यज्ञायज्ञीयकारी स्याद्यथा ह शाण्डिल्यस्य वचोऽविक्लृप्तानुष्टुप् २ यद्यु वै कण्वबृहत्कारी यथा धानंजय्यस्य ३ विकल्पयेदनुष्टुभम् । गौरीवितमेकस्याम् । कार्तयशसमेकस्याम् । आत्रेयमेकस्याम् । यज्ञायज्ञीयं तिसृष्विति कुर्यादिति ४ यथा प्रथमस्यैवमष्टमस्य ५ तत्रानुष्टुभि यज्ञाय-ज्ञीयमनुकल्पयेत् । गौरीवितमेकस्याम् । ऐडं कौत्समेकस्याम् । स्वारंकौत्समेकस्याम् । पराणि तृचेषु । यज्ञायज्ञीयं तिसृष्विति कुर्यादिति ६ यथा द्वितीयस्यैवं नवमस्य ७ यद्यु ह यज्ञायज्ञीयकारी स्याद् । यथा शाण्डिल्यस्य वचोऽविक्लृप्तानुष्टुप् ८ यद्यु वै कण्वबृहत्कारी यथा धानंजय्यस्य ९ विकल्पयेदनुष्टुभम् । गौरी-वितमेकस्याम् । निहव एकस्याम् । आकूपारमेकस्यां यत्स्वयोनि । पराणि तृचेषु । यज्ञायज्ञीयं तिसृष्विति कुर्यादिति १० अथाग्रत एवानुरूपाग्निष्टोमसाम दशममहर्भवति । एतस्माद्वा एतानि योनेर-सृज्यन्तेति हि भवतीति ११ एषोऽनुरूपाग्निष्टोमसामा द्वादशाहः १२ तेनैतेन यजेत यः कामयेतानुरूपा मा प्रजा जायेतेति । जायेतेति १३

इति तृतीये प्रपाठके नवमः खण्डः ९

दशमः खण्डः

अथातो व्यूढस्य रूपेण समूढः १ व्यूढस्यैव सामान्ताः । समूढस्यैव छन्दांसि २ तेन कोऽर्थ इति ३ व्यूहेत्समूहेदिति खल्वयं दशरात्रो

व्युदितो भवति । सामान्तैर्हास्य व्यूहकाममुपाप्स्यामि छन्दोभिः समूहकामम् । अत्रोभौ कामावुपाप्तौ भविष्यतो व्यूहकामश्च समूहकामश्चेति ४ तस्यानिङ्गः प्रथमस्त्र्यहः ५ चतुर्थस्याह्नः श्यावाश्वशैखण्डिनेऽन्ते स्याताम् ६ तदेतच्छ्यावाश्वमाजुहोतेति बहिःस्वारम् । बहिःस्वारस्यस्थाने सत्रासाहीयस्य ७ अत्ते दधामीति शैखण्डिनमीनिधनम् । ईनिधनस्य स्थाने वात्सप्रस्य ८ सम्पा च श्येनश्च पञ्चमस्य ९ सैषा सम्पा पदानुस्वारा । पदानुस्वारस्य स्थाने शैशवस्य १० उभे यदिन्द्र रोदसी इति त्रिणिधनो ग्रामेगेयः श्येनस्त्रिणिधनस्य स्थाने दाशस्पत्यस्य ११ वार्त्रतुरं च वरुणसाम च षष्ठस्य १२ तदेतद्वार्त्रतुरं यजामहो वेति बहिःस्वारम् । बहिःस्वारस्य स्थाने इहवतो वामदेवस्य १३ घृतवतीति वरुणसामैकृतनिधनम् । एकृतनिधनस्य स्थाने श्नौष्टस्य १४ तदिहवद्वामदेव्यमन्तात् प्रच्यवते यत्पुरा विभक्तिरिहवद्भवति । तन्माध्यंदिनीयायां गायत्र्यामनुगृह्णाति । क्रौञ्चमेकस्याम् । इहवद्वामदेव्यमेकस्याम् । मार्गीयवमेकस्याम् । इति क्रौञ्चस्य लोकं विकल्पयति १५ अथ यान्येव छन्दोमानां समूह्यमानानामार्भवान्त्यानि तान्यार्भवान्त्यानि । अपि हि छन्दोमा व्यूह्यमाना इडान्ता एव भवन्तीति १६ माध्यंदिनान्त्यानि त्वेषां वाङ्निधनानि जागतानि त्रिष्टुप्सु कल्पयेदिति ह स्माह शाण्डिल्यः १७ प्रवद्भार्गवमुद्वद्भार्गवं सामराजमिति १८ सच्छन्दस्यानीति धानंजय्यः १९ कुत्सस्याधिरथीयं सप्तमस्याह्नोऽन्त्यं कुर्यात् । प्रसेनानीः शूरो अग्रे रथानामित्येतेषां प्रथमम् । वैश्वज्योतिषमष्टमस्य । प्र ते धारा मधुमतीरसृग्रन्नित्येतत् २० वैश्वज्योतिषमेव नवमस्य प्र हिन्वानो जनिता रोदस्योरित्येतद्यदि पुरा सामराजकारी स्यात् । यद्यु वार्ककारी वात्सप्राणां तृतीयं कुर्याद् । होई होई होई जगृह्म ते दक्षिणमिन्द्र हस्तमित्येतत् २१ नवमादह्नोऽर्कः प्रच्यवते तमनुष्टुभ्यनुगृह्णाति । तस्योक्तः कल्पः २२ समापद्यन्ते दशमेऽहनि सामानि

यथा छन्दोमदशाहे तथा दशममहः २३ तस्य तथा सतो गौशृङ्गं माध्यंदिनान्त्यं स्यात् । तरणिरित्सिषासतीत्येतेषामुत्तमम् २४ तन्न बहिःस्वारं त्रैष्टुभमकृतं विद्यतेऽथेदं बहिःस्वारमु ह भवति । त्रैष्टुभमु गीत्या संपद्यते २५ वाजजिदेवात्रान्त्यं स्याद्यज्ञायज्ञीयनिधनं सौहविषं द्विपदास्विति २६ एष व्यूढस्य रूपेण समूढः । स एष व्यूढ एव भवतीति २७

इति तृतीये प्रपाठके दशमः खण्डः १०

## एकादशः खण्डः

अथातः समूढस्य रूपेण व्यूढः । समूढस्यैव सामान्ता व्यूढस्यैव छन्दांसि १ तेन कोऽर्थ इति २ य एव पूर्वेणेति ३ तस्यानिङ्ग एव प्रथमस्त्र्यहः ४ चतुर्थस्याह्नो यामं माध्यंदिनान्त्यं स्यादिति ह स्माह शाण्डिल्योऽग्ने मृड महाँ असीत्येतयोः पूर्वं वोत्तरं वेति ५ तृतीयसवनचराणि यामानि भवन्तीति ह स्माह धानंजय्यो गोराङ्गिरसस्य साम कुर्यात् । कस्य नूनं परीणसीत्येतयोरुत्तरम् ६ शैशवमेव पञ्चमस्य ७ अयासोमीयं षष्ठस्याया सोम सुकृत्ययेत्येतत् ८ अथ यान्येव पृष्ठस्य समूह्यमानस्य माध्यंदिनान्त्यानि तान्यत्रार्भवान्त्यानि परिहरेत् सस्तोत्रीयाणि ९ अथ यान्येव छन्दोमानां व्यूह्यमानानामार्भवान्त्यानि तान्यर्भवान्त्यान्यपि हि छन्दोमाः समूह्यमाना इडान्ता एव भवन्तीति १० माध्यंदिनान्त्यानि त्वेषां सर्वाणि त्रैष्टुभानि जगतीषु कल्पयेदिति ह स्माह शाण्डिल्यः ११ वाराहं वासिष्ठं वासिष्ठमिति १२ सच्छन्दस्यानीति धानंजय्यः १३ इन्द्रस्यापामीवं सप्तमस्याह्नोऽन्त्यं कुर्यादिन्द्राय सोम सुषुतः परि स्रवेत्येतयोः पूर्वम् १४ वायोरभिक्रन्दमष्टमस्यैतयोरेवोत्तरम् १५ सिमानां निषेधो नवमस्य । आचोवाहाइ इत्येतत् १६ नवमादह्नोऽर्कः प्रच्यवते तमनुष्टुभ्यनुगृह्णाति । तस्योक्तः कल्पः कर्मणि १७ न समापद्यन्ते दशमेऽहनि

सामानि १८ औशनकावे एवात्रान्त्ये स्याताम् १९ तदतो गौरीवितमन्तात्प्रच्यवते । तद् बृहत्यामनुगृह्णाति । उत्सेध एकस्याम् । गौरीवितमेकस्याम् । रौरवमेकस्याम् । इत्युत्सेधस्य लोकं विकल्पयति २० तदत्र स्वारं कावमन्त्यम् । स्वारं वामदेव्यमग्निष्टोमसाम । तदर्थसंनिपाते जामि विद्यात् । तन्न वारणमिव कुर्वीत । अर्थमत्र बलीयांसं जामितायै मन्येतेति २१ एष समूढस्य रूपेण व्यूढः । स एष समूढ एव भवतीति २२

इति तृतीये प्रपाठके एकादशः खण्डः ११

द्वादशः खण्डः

अथातः समूढस्य रूपेण समूढः १ समूढस्यैव सामान्ताः । समूढस्यैव छन्दांसि २ तेन कोऽर्थ इति ३ उभौ खल्विमौ पूर्वौ दशरात्रावयमपिपतत् ४ सामान्तानेवान्यतरस्य व्यूही च्छन्दांस्यन्यतरस्य । अथोभयमेव समूढं भविष्यति । सामान्ताश्चैव छन्दांसि च ५ एष वै कुशलसमूढो यदुभयतस्तेन कल्पसमूढ इति ६ तँ ह स्मैतं धानंजय्यो व्याचष्टे । ज्योतिष्टोमस्य समूहेन समूढ इति ७ तस्यानिङ्गः प्रथमो द्व्यहः ८ तृतीयादह्न उद्धृत्य त्रिणिधनं त्वाष्ट्रीसामैडंत्वाष्ट्रीसाम तस्य स्थानेऽनुकल्पयेत् ९ उद्धृत्यारिष्टँ स्वारँ सामराजं तस्य स्थानेऽनुकल्पयेत् १० उक्तः पृष्ठ्यस्य समूढः ११ अथ यान्येव छन्दोमानां समूह्यमानानां माध्यदिनान्त्यानि तानीमान्यार्भवान्त्यानि १२ तेषां स्वाराणि जागतानि । तान्येवेन्द्रस्यापामीववायोरभिक्रन्दसिमानांनिषेधा इति १३ सप्तमादह्न उद्धृत्य सौहविषं जराबोधीयं तस्य स्थानेऽनुकल्पयेत् १४ छन्दोम इडामनुजिघृक्षन् मा स्वारं निरिड आर्भवोऽभूदिति १५ नवमादह्नोऽर्कः प्रच्यवते । तमनुष्टुभ्यनुगृह्णाति । तस्योक्तः कल्पः १६ समापद्यन्ते दशमेऽहनि सामानि । यथा छन्दोमदशाहे तथा दशममहरिति १७

एष समूढस्य रूपेण समूढः स एष समूढ एव भवतीति १८ अथातो व्यूढरूपेण व्यूढः १९ व्यूढस्यैव सामान्ता व्यूढस्यैव छन्दांसि । सोऽयमेव द्वादशाहो यमिममधीमहे २०

इति तृतीये प्रपाठके द्वादशः खण्डः १२

## त्रयोदशः खण्डः

अथातः संक्रमद्वादशाह इत्याचक्षते १ अपि च समात्समतरः इति २ यानि प्रथमानि त्र्यहाणामहानि स प्रथमस्त्र्यहः । यानि द्वितीयानि स द्वितीयः । यानि तृतीयानि स तृतीयः । दशममेव दशममहः ३ किमुपज्ञोऽयं भवतीति ४ त्र्यहशः खल्वयं पुरा दशरात्रः समतां लभते । स यथा मेऽहरहश्च समतां लप्स्यते संपरेतश्च तथा करवाणीति ५ यदवसानः पूर्वस्त्र्यहस्तत्प्रभृतिरुत्तरोऽथेह यदवसानं पूर्वमह-स्तत्प्रभृत्युत्तरं भविष्यतीति ६ तं यत् संक्रमद्वादशाह इत्याचक्षते । यन्नूनमेतत्समाक्रान्तानीवाहानि भवन्ति ७ यदु समात्समतर इति । पूर्वः खल्वयं दशरात्रः समः । तस्मादप्ययं समतर एव भवतीति ८

इति तृतीये प्रपाठके त्रयोदशः खण्डः १३

## चतुर्दशः खण्डः

अथापरे चत्वारो भवन्ति १ अग्निष्टुदिन्द्रस्तुत्सूर्यस्तुद्वैश्वदेवस्तुदिति २ आग्नेयेषु प्रगाथेषु छन्दोमानां ब्रह्मसामानि कल्पयेत् बार्हतेषु । सोऽग्निष्टुत् ३ तेनैतेनान्नाद्यकामो यजेत । अग्निरन्नाद्यस्य प्रदातेति हि भवतीति ४ ऐन्द्रेषु प्रगाथेषु छन्दोमानां ब्रह्मसामानि कल्पयेत् बार्हतेषु । स इन्द्रस्तुत् ५ तेनैतेन राजा संग्रामी वा बलकामो वा यजेत । इन्द्रो हि राज्यस्येष्ट इति हि भवतीति ६ सौर्येषु प्रगाथेषु छन्दोमानां ब्रह्मसामानि कल्पयेत् बार्हतेषु । स सूर्यस्तुत् ७ तेनैतेन यजेत यो वा यज्ञे मुह्येत् । यस्य वा यज्ञः सामि विलुप्येत ।

सूर्योऽप्रज्ञातस्य प्रज्ञातेति हि भवतीति ८ वैश्वदेवेषु प्रगाथेषु छन्दोमानां ब्रह्मसामानि कल्पयेद्बार्हतेषु । स वैश्वदेवस्तुत् ९ तेनैतेन प्रजातिकामो यजेत । विश्वे हि देवाः प्रजातेरीशा इति हि भवतीति १० स यच्छन्दोमानेव विकरोति ११ एते यथाकामं कल्प्यतराः पृष्ठ्याद्भवन्ति १२ यदु ब्रह्मसामान्येतानि ह्याशीर्धानानि भवन्तीति १३

इति तृतीये प्रपाठके चतुर्दशः खण्डः १४

पञ्चदशः खण्डः

अथापरे दश भवन्ति १ यथास्तोमं प्रथममहस्तथास्तोमोऽयं सर्वो दशरात्रः स्यात् २ तेनैतेन तेजस्कामो ब्रह्मवर्चसकामो वा यजेत ३ यथा द्वितीयम् ४ तेनौजस्कामो वीर्यकामो वा ५ यथा तृतीयम् ६ तेन प्रतिष्ठाकामः प्रजातिकामो वा ७ यथा चतुर्थम् ८ तेन प्रतिष्ठाकामः ९ यथा पञ्चमम् १० तेन पुष्टिकामः परं वा जिघांसन् ११ यथा षष्ठम् १२ तेन प्रतिष्ठाकामः १३ यथा सप्तमम् १४ तेन तेजस्कामो ब्रह्मवर्चसकामो वा १५ यथाष्टमम् १६ तेनौजस्कामो वीर्यकामो वा १७ यथा नवमम् १८ तेन प्रतिष्ठाकामः प्रजतिकामो वा १९ यथा दशमम् २० तेन तेजस्कामो ब्रह्मवर्चसकामः प्रतिष्ठाकामः प्रजातिकामो वा । एवं प्राजापत्यं दशममहरिति हि भवतीति २१

इति तृतीये प्रपाठके पञ्चदशः खण्डः १५

षोडशः खण्डः

अथातोऽनन्ता द्वादशाहा इति हि प्रतिदिशन्ति १ यावन्त्यृवसामानि तावन्तो द्वादशाहास्ततो वा भूयांसः २ तेषामाहारं कल्पयेत् । स यदा सर्वा ऋचः समियात् सर्वाणि सामानि सर्वान्त्स्तोमान् ३ अप्येकतृचमाहृत्यान्यस्य स्थानेऽनुकल्पयेत् । तत एव सोऽन्यः कल्पो

भवतीति ४ पश्यामो हि वयमेकतृचेनैवाप्यन्यं कल्पं भवन्तं यथा भवति । एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो यजेतेति । अपि वैकं स्तोममाहृत्यान्यस्य स्थानेऽनुकल्पयेत् । तत एव सोऽन्यः कल्पो भवतीति । पश्यामो हि वयमेकस्तोमेनैवाप्यन्यं कल्पं भवन्तं यथा भवति । एतस्यैवैकविंशमग्निष्टोमसाम कृत्वा-मयाविनं याजयेदिति ५ अपि वा प्रतिपदावेवान्योन्यस्य स्थानं व्यतिहरेत् । स्तोमौ वा कल्पौ वा तन्त्रे वा पृष्ठे वा संस्थे वा सामनी वा तत एव सोऽन्यः कल्पो भवति ६ एतेन प्रदेशेनापार एव द्वादशाहानां विद्यते न पार इति । न पार इति ७

इति तृतीये प्रपाठके षोडशः खण्डः १६

तृतीयः प्रपाठकः समाप्तः ३

क्षुद्रकल्पसूत्रं समाप्तम्

Reference:

Sharma, B.R., ed., *Kṣudrakalpasūtra of Mashaka Gārgya with the Commentary of Shrī Shrīnivāsa*, (Hoshiarpur: Panjab University, 1974).